पूजनात्पठनादस्य राधाकृष्णप्रियो भवेत्॥
ब्रह्मानन्दरसादनन्तगुणितो रम्योरसो वैष्णव-
स्तस्मात्कोटिगुणोज्ज्वलश्च मधुरः श्रीगोकुलेन्द्रोरसः।
तस्यानन्तचमत्कृतेः प्रतिमुहुर्वीक्षाजनतानां परं
श्रीराधापदपद्ममेव परमं सर्वस्वभूतं महः॥ 136

इति श्रीस्वायम्भुवागमे श्रीरुद्रनारदसंवादे
श्रीमद्राधारहस्ये त्रैलोक्यसंमो-
हनस्तोत्रं सम्पूर्णम्॥

---

## अथ श्रीगोपालपूजा लिख्यते—

ओँ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूताविघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया॥
अथ तालत्रयं दिग्बन्धनं ओँ इन्द्रायनमः ओँ अग्नयेनमः ओँ यमायनमः ओँ नैऋतायनमः ओँ वरुणायनमः ओँ वाय-वेनमः ओँ कुबेरायनमः ओँ ईशानायनमः ओँ ब्रह्मणेनमः ओँ अनन्तायनमः अस्त्राय फट् इति आसने पुष्पं दत्वा ओँ आसनमन्त्रस्य मेरुपृष्ठऋषिः सुतलश्छन्दः श्रीकूर्मो देवता अन-
122 न्तबीजं पृथिवी शक्तिः आसने विनियोगः॥ 122
पृथ्विवित्वं धृता लोका देवि त्वँ विष्णुना धृता।

त्वञ्च धारय मां देवि पवित्रमासनं कुरु ॥

ब्रह्मणे नमः वामे गुरुभ्यो नमः परमगुरुभ्यो नमः परापरगुरुभ्यो नमः दक्षिणे आचार्याय नमः हृदयपरमात्मने नमः अग्निप्राकारं चिन्तयित्वा भूतशुद्धिं कुर्यात् ॥

भूतशुद्धिमन्त्रस्य हरिरात्मा ऋषिः पुरुषप्रकृतिश्छन्दः पुरुषो बीजम् प्रकृतिः शक्तिः दहनशोषणप्लावने विनियोगः ॥

ध्यानम् —

ओं षड्बिन्दुचिह्नितं वृत्तपवनमण्डलस्थितं धूम्रं चण्डानिलाकारं यमिति वायुबीजं नाभौ ध्यात्वा तेनैव वायुबीजेन देहं शोषयेत् ओं अग्निबीजस्य परमात्मा ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता दहने विनियोगः। ध्यानम् — त्रिकोणमण्डलमध्यस्थं पावकाकारं रक्तवर्णं अग्निबीजं बिन्दुसहितं हृदये ध्यात्वा वायुबीजेन पापसहितं दहेत्। ओं लमिति अमृतबीजस्य ब्रह्मा ऋषिः देवी गायत्री छन्दः परमात्मा देवता कल्पने विनियोगः पापपुरुषचिन्तनम् ॥

वामपार्श्वे स्थितं पापं पुरुषं कज्जलप्रभम्।
ब्रह्महत्याशिरस्स्थंच स्वर्णस्तेयं भुजद्वयम्।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।
सुरापानहृदि युक्तं गुरुतल्पकटिद्वयम्
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम्।

खड्गचर्मधरं क्रूरं वामकुक्षौ विचिन्तयेत्।

प्रणवमन्त्रस्य प्रजापतिऋषिः दैवीगायत्रीच्छन्दः परमात्मादेवता परमात्मप्रीतये विनियोगः॥

~~रेचकः षोडशमात्राभिः पुरो द्वात्रिंशतां भवेत्।~~

ओं आं अङ्गुष्ठाभ्यां नमः इं ओं ईं तर्जनीभ्यां स्वाहा उं ओं ऊं मध्यमाभ्यां वषट्। एं ओं ऐं अनामिकाभ्यां हुं ओं औं ओं कनिष्ठाभ्यां वौषट् अं ओं अः करतलकरपृष्ठाभ्यां अस्त्राय फट्। एवमङ्गन्यासः॥

रेचकः षोडशमात्राभिः पुरो द्वात्रिंशतां भवेत्।
चतुष्षष्मा भवेत्कुम्भ एवं मे प्राणसंयमः।

विश्वं भास्वत्किरीटाङ्गदवलयगलाकल्पभारोदराङ्घ्रि-
श्रोणीभूषं सवक्षो मणिमकरमहाकुण्डलामण्डिताङ्गम्।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवासं
123 विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि॥
पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो
देहं भास्वत्कपर्दागलितशशिकलामिन्दुकुन्दावदाताम्॥
अक्षस्तः कुम्भचिन्तां लिखितवरकरां त्र्यक्षरां पद्मसंस्थां-
मच्छाकल्पावतुच्छस्तनजघनभरां भारतीं तां नमामि॥
आधारे लिङ्गनाभौ हृदयसरसिजे कण्ठदेशे ललाटे 123
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के।

वासान्ते वालमध्ये ड पकठसहिते कण्ठदेशे स्वराणां
हंक्षं तत्वार्थयुक्तं कमलदलगतं वर्णरूपं नमामि॥

जपाद्यं सर्वमन्त्राणां विन्यासेन जपस्यच।
तत्कृतं निष्फलविद्या तस्मात्पूर्वन्यतद्बुधः।
भूतशुद्धिं विनायस्य जपहोमार्चनक्रिया।
भवन्ति निष्फलास्सर्वे न्यासो नृत्यन्नसंशयः॥

अथपूजारम्भः—

आसनवामभागेन शङ्खादिकं स्थाप्यम्। दक्षिणे गन्धपुष्पाक्षतादिस्थापनम्। मध्ये जलपूर्णताम्रभाजनम्। पार्श्वे करप्रक्षालनपात्रम्। अग्रे दीपं प्रज्वाल्य शङ्खसंस्कारं कुर्यात। त्रिकोणं ततः षट्कोणं तद्बहिर्वृत्तं चतुरश्रमण्डलं तन्मध्ये शङ्खस्थापनं मूलमन्त्रेण शङ्खप्रक्षालनं मूलमन्त्रेण जलपूरणं मूलमन्त्रेण तदुपरि गन्धपुष्पं प्रक्षिप्य मूलमन्त्रेण अष्टधा जपेत॥

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेस्मिन् सन्निधिं कुरु॥

इतितीर्थान्यावाहयेत। शङ्खोदकेन समस्तपूजोपकरणं प्रोक्षयेत करशुद्धिः करौ गन्धलिप्तयोः॥

अथपीठपूजा—

कूर्मायनमः आत्मशक्तिकमलासनाय नमः इति स्वासने पुष्पं नमः स्वमूर्तये नमः शिरसि पुष्पं नमः आधारभावना।

मण्डूकाय नमः कालाग्निरुद्राय नमः कूर्माय नमः आधारशक्-
यै नमः अनन्ताय नमः पृथिव्यै नमः कल्पद्रुमाय नमः मणिमण्डपा-
य नमः रत्नवेद्यै नमः मूलमन्त्रमष्टधा जपेत् । अर्घ्यसंस्कारं कुर्या-
त् । जलसंस्कारः मूलमन्त्रेण देवतां स्नापयेत् । देवाताङ्ग प्रोञ्छनम् ।
पीतवस्त्रपरिधापनम् । सर्वालंकारभूषितं चित्रविचित्रवेषम् ।
अधरमुरलीमनोहरं मूलमन्त्रमुच्चार्य सिंहासने निवेशयेत् । आवा-
हनं कुर्यात् । आवाहनसंस्थापनसन्निरोधनसन्निधानसकली-
124 करणपरमीकरणावगुण्ठनामृतीकरणपरमीकरणं कुर्यात् ॥ मूल-
मन्त्रमुच्चार्य स्वनामचतुर्थ्यां पूजयेत् । श्रीकृष्णाय आसनं नमः श्री
श्रीकृष्णाय स्वागतं नमः श्रीकृष्णाय पाद्यं नमः श्रीकृष्णाया-
चमनीयं नमः श्रीकृष्णायार्घ्यं नमः पुनराचमनम् मधुपर्कं स्नानं
आचमनं वस्त्रं यज्ञोपवीतं आचमनमाभरणमायुधमाचमनं श्रीकृ-
ष्णाय गन्धं नमः शिरसि पुष्पं नमः स्वस्वमुद्रादर्शनम् ॥३

अथ आवरणपूजा —

ओं दाम्ने नमः सुदाम्ने नमः किङ्किणीदाम्ने नमः इति चतु-
र्दिक्षु पूजयेत् । अष्टदिक्षु क्रमेण वसुदेवाय नमः देवक्यै नमः नन्द-
गोपाय नमः यशोदायै नमः सौभद्राय नमः गोपिभ्यो नमः
एतानर्घ्यगन्धपुष्पदीपैः प्रपूजयेत् ॥

अथ घण्टाचालनम् — वामहस्ते वादनम् ॥ 124
धेनुमुद्रां प्रदर्श्य धूपपात्रं गृहीत्वा श्रीकृष्णाय धूपं नमः

दीपसंस्कारः दीपमुद्रां दर्शयेत्। श्रीकृष्णाय दीपं नमः। अथ नै-
वेद्यम् — विकचोत्पलसन्निभां ग्रासमुद्रां प्रदर्श्य मूलमन्त्रमुच्चार्य
श्रीकृष्णाय नैवेद्यं स्वाहा। श्रीकृष्णाय आचमनम् मूलमन्त्रम-
ष्टोत्तरं शतं जपेत् पुष्पाञ्जलित्रयं दद्यात्। प्रदक्षिणम्॥

इति श्रीसनातनगोस्वामिविरचिता
गोपालपूजा समाप्ता॥

---

श्रीः

## अथ वैष्णवपूजा.

प्रथमतः श्रीराधाकृष्णस्मरणम्। आसनोपरि उपविश्य
सिद्धदेहं भावयित्वा श्रीगुरुभ्यो नमः श्रीपरमगुरुभ्यो नमः
श्रीपरापरगुरुभ्यो नमः शङ्खप्रक्षालनम्। शङ्खे जलं पूरयित्वा
शङ्खे तीर्थावाहनम्।

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥

इति मन्त्रेण शङ्खसंस्कारं कुर्यात्। नाराचमुद्रां शङ्खोपरि दर्शयित्वा
शङ्खमुद्रां दर्शयेत्॥ धेनुमुद्रां दर्शयेत् शङ्खोपरि मूलमन्त्रेण त्रि-
धा जपेत् शङ्खजलेन घण्टाप्रक्षालनम्। जगद्धूर्णिने नमः। अने-
न मन्त्रेण गन्धपुष्पाभ्यां संपूज्य अनेन मन्त्रेण वामहस्तेन घण्टा-